Research Paper | Education | E-ISSN No : 2454-9916 | Volume : 10 | Issue : 7 | July 2024




# नारदीयभक्तिसूत्रानुसारेण भक्तितत्त्वस्य स्वरूपविमर्शः

Dr. Shreebas Debnath

Assistant Professor, Department of Sanskrit, Santipur College, Santipur, Nadia, West Bengal

## ABSTRACT

जगदिदं दुःखपूर्णम्। सर्वे जीवा अत्राध्यात्मिकाधिभौतिकाधिदैविकदुःखपीडिताः सन्ति। तेषां दुःखमोचनाय शास्त्रकारा बहुविधानि शास्त्राणि प्रतियुगं रचितवन्तः। नारदविरचितभक्तिसूत्रे आनन्दमयजीवनलाभार्थं भक्तिमार्गो निर्दिष्टः। प्रबन्धेऽस्मिन्नादौ सरलसुरगिरा श्रीमद्भागवतमहापुराणानुसारेण देवर्षेर्नारदस्य संक्षिप्तजीवनमुपस्थापितम्। ततो नारदस्य भक्तिसूत्रानुसारं भक्तिलक्षणं, तद्विषये मतभेदः, ज्ञानकर्मयोगेभ्यो भक्तेः श्रेष्ठता, भक्तिमार्गस्य साधनानि, भक्तेन संसारासक्तिरूपमायातरणं, भाषया भक्त्या अप्रकाश्यत्वं, गौण्या भक्त्यास्त्रिविधभेदाः, भक्त्याः सुलभता सार्वजनीनता च, भक्तिपथो बाधकानि, तेषां बाधकानां प्रतिकाराः, भक्तिफलं, भक्त्या एकादशविधा भेदा भक्तमाहात्म्यञ्चोपथापितानि। साहित्यसमीक्षणमार्गोऽत्रावलम्बितः।

**KEYWORDS:** भक्तिः, नारदः, भक्तिलक्षणम्, भक्तिसाधनम्, भक्तमाहात्म्यम्, भक्तिफलम्, ईश्वरप्रेम।

**कथामुखम्–** भगवल्लाभोपायेषु भक्तिमार्गो ह्यन्यतमः। भज सेवायामिति भज्धातुना सह क्तिन्प्रत्ययेन स्त्रीलिङ्गे भक्तिशब्दो निष्पद्यते। भक्तिप्रख्यापकेषु शास्त्रेषु देवर्षिनारदप्रणीतभक्तिसूत्रमस्त्यतीव संक्षिप्तं, विषयानुसारि, सरलं तथोच्चभावोद्रेककारि च। ग्रन्थोऽयं दशस्वध्यायेषु विभक्तः। ग्रन्थेऽस्मिन् केवलं चतुरशीतिः सूत्राणि समुल्लसन्ति। एतेषु सूत्रेषु भक्तेः स्वरूपं, भक्तिमाहात्म्यं, भक्तिभेदः, भक्तानां पालनीयाचारादिकञ्च सुष्ठु देवर्षिणा प्रकाशितानि। अस्य तात्त्विकग्रन्थस्योपयोगिता प्रतियुगमेव भक्तैर्दार्शनिकैर्धार्मिकैः सन्न्यासिभिश्चानुभूता। अतो धर्मसभासु विद्व त्कक्ष्यासु भक्तगृहेषु च नारदीयभक्तिसूत्रस्य पाठालोचनादि दरीदृश्यते। हे विद्वांसः! हे भक्ताः! हे भगवत्पथानुसारिणः! आगच्छन्तु। अनेन प्रबन्धमुखेन नारदीयभक्तिसूत्रनिहितपीयूषं भवद्भिः कृपया पीयताम्। दुःखपूर्णेऽस्मिन् संसारे यदि प्रबन्धस्यास्य पाठात् क्षणकालनिमित्तमपि मनसि भक्त्यानन्दधारा प्रवहति, तर्हि तदेव समीचीनं कर्म स्यात्।

**श्रीमद्भागवतमहापुराणानुसारेण नारदस्य संक्षिप्तं जीवनचरितम्–** श्रीमद्भागवतमहापुराणानुसारेण ब्रह्मणो मानसपुत्रो नारद एकदा व्यासदेवस्य सकाशमागत्य दुःखितमतृप्तं महाभारतप्रणेतारं व्यासदेवं संपश्य तस्यातृप्तिप्रशमनाय तस्मै श्रीकृष्णलीलां प्रख्यापयितुमुपदिदेश। तदा स देवर्षिरात्मनः पूर्वजीवनवृत्तान्तं प्रकाशितवान्। अतीतकल्पे पूर्वजन्मनि स वेदज्ञब्राह्मणानां कस्याञ्चिद्दास्यां जनिं लेभे। वर्षाकाले ते ब्राह्मणाश्चातुर्मास्यव्रतमुपलक्ष्य एकत्रिता अभवन्। आ बाल्यादेव नारदस्तेषां सेवायां नियुक्तोऽभवत्। तथाहि भागवतपुराणस्य प्रथमस्कन्धस्य पञ्चमाध्याये त्रयोविंशतितमे श्लोके व्यासेनाभाणि–

"अहं पुरातीतभवेऽभवं मुने दास्यास्तु कस्याश्चन वेदवादिनाम्।
निरूपितो बालक एव योगिनां शुश्रूषणे प्रावृषि निर्विवक्षताम्"[1] इति।
(श्रीमद्भागवतम् –१/५/२३)।

बालकः सन्नपि स बालकसुलभचापल्यरहितः, संयतेन्द्रियः, क्रीडास्वनासक्तो भूत्वा मुनीनामाज्ञां सम्यक् पालितवान्। स्वल्पभाषिणं तं नारदं समदर्शिमुनयोऽत्यन्तं कृपां प्रकटितवन्तः। तेषामाज्ञानुसारं स तेषां भिक्षापात्रसंलग्नप्रसादं प्रतिदिनमेकवारमभक्षयत्। तदुच्छिष्टभोजनेन तस्य सकलानि पापान्यपागच्छन्। साधुशुश्रूषया नारदस्य चित्तशुद्धिरभवत् साधुविहितभजनपूजनध्यानादिधर्मेषु च तस्याभिरुचिर्जाता। प्रतिदिनं स श्रीकृष्णलीलामश्रृणोत्। अनेन तस्य भगवति प्रबलानुरागः सञ्जातः। तस्मिन्ननुरागे सति नारदस्य चित्तवृत्तिर्गोविन्दनिष्ठाऽभवत्। तदा स स्वस्यात्मनि सदसद्रूपमखिलं जगदिदं भगवच्छक्तिमायाकल्पितमित्यपश्यत्। एवं शरदि प्रावृषि च प्रतिदिनं तिसृषु सन्ध्यासु ते महात्मानो भगवतः श्रीहरेर्निर्मलय शोराशिकीर्तनमकुर्वन्। नारदश्च श्रद्धया तदश्रृणोत्। क्रमात्तस्य हृदये रजस्तमोगुणनाशकभक्तेराविर्भावोऽभवत्। नारद आसीत्तेषां साधूनामतीवानुरागी, विनयी तत्सेवया विगतसकलपापश्च। इन्द्रियसंयमिनारदः कायमनोवाक्यैः साधूनामाज्ञां पालितवान्। गमिष्यन्तस्ते दीनवत्सलाः साधवः कृपया भगवदुद्दिष्टमत्यन्तं गोपनीयं ज्ञानमुपदिष्टवन्तस्तस्मै नारदाय। तदुपदेशानुसारं स जगन्निर्मातुर्मायाधीशस्य भगवतः श्रीकृष्णस्य कृपाशक्तिवैभवं जज्ञौ। श्रीकृष्णस्तस्य भक्तिभावं परिज्ञाय नारदायात्मज्ञानमैश्वर्यज्ञानं प्रेमभक्तिं च प्रददौ।

नारद आसीत्तस्य मातुरेकमात्रः पुत्रः। मातरं विहाय नारदस्यापि कोऽपि स्वजनो नासीत्। माता तं स्नेहपाशेनाबद्धीचकार। नारदस्य भरणपोषणार्थं सा सदा चिन्तिता आसीत्। परन्तु पराधीनत्वात् सा किमपि कर्तुं नाशक्नोत्। मात्रा सह नारदोऽपि ब्राह्मणगृहेऽवसत्। पञ्चवर्षकाले तस्य दिक्कालदेशविषये काऽपि धारणा नासीत्। तदैकदा गोदोहनार्थं तस्य माता प्रत्यूषे एव गृहाद्बहिर्गता। मार्गे दैवात्पदाहत एकः सर्पस्तामदशत्। इमां दुर्घटनां नारदः कल्याणकामिनो भगवतोऽनुग्रहरूपेण स्वीचकार। ततः स उत्तरां दिशं जगाम। मार्गेण गच्छता नारदेन बहूनि सुसमृद्धानि नगराणि, जनपदा, ग्रामा, गोपनिवासा, रत्नखनयः, कृषकग्रामा, नद्यः, पर्वतसन्निकटस्थग्रामाः, पुष्पवाटिका, वनानि, उपवनानि विचित्रवर्णोपरञ्जितपर्वतमालाश्च परिदृष्टानि। कुत्रचित् कुत्रचित्

स कुञ्जरभग्ना वृक्षशाखा अपश्यत्। कुत्रचित् शीतलजलेन परिपूर्णे जलाशये देवकार्ये व्यवहारयोग्यानि पद्मानि प्रस्फुटितानि आसन्। तेषां पद्मानां चतुर्दिक्षु मधुरकण्ठिविहगकलतानप्रणोदितभ्रमरा अविचरन्। एतानि दृश्यानि पश्यन्नारदः सम्मुखं जगाम। स आसीदेकाकी। सुदीर्घं पन्थानमतिक्रम्य स एकामटवीमपश्यत्। सा अटव्यासीत् नलवेणुशरगुल्मकुशकीचकाकीर्णा। तदरण्यमासीद्दैर्घ्येण प्रस्थेन च विशालम्। सर्पश्रृगालोलूकादिप्राणिनां वासस्थानं तज्जङ्गलमासीद्भयङ्करम्। चलतो नारदस्य देहेन्द्रियादीनि अवसीदन्ति स्म। स क्षुधार्तस्तृष्णार्तश्चाभवत्। मार्गे तेनैका नदी दृष्टा। तस्यां सोऽस्नासीत्। तस्माज्जलं पपौ। आचमनादिकमपि तज्जलेनाकरोत् सः। तेन तस्य श्रान्तिरपगता। तस्मिन् निर्जने वने कस्यचिदश्वत्थवृक्षस्याधस्तात् स उपविष्टवान्। महात्मनामुपदेशानुसारं स दृढानुरागेण सह हृदयस्थपरमात्मानमचिन्तयन्मनसा। हरिभक्तिभावितचित्ते भगवतश्चरणकमलं ध्यायतो नारदस्य भगवद्दर्शनानुगामिसुतीव्रलालसासृष्टोत्कण्ठया नयने अश्रुप्लाविते अभवताम्। शनैः शनैस्तस्य हृदये श्रीभगवानाविर्बभूव। तदा प्रेमातिशय्येन तस्य शरीरं रोमाञ्चितमभवत् हृदयञ्च प्रशान्तं सुशीतलं चाभवत्। तस्मिन्नानन्दसागरे मज्जता नारदनोपास्योपासकभेदो नानुभूतः। भगवतस्तद्रूपमासीत्सर्वशोकविनाशकं मनोऽभीष्टप्रदं च। सहसा सा मूर्तिरपगता। नारदो विह्वलो जातः। स्वासनात् स उत्तिष्ठः। स पुनरपि तद्रूपं द्रष्टुमैच्छत्। परन्तु समाधिना वारं वारं तेन चेष्टायां कृतायामपि स तद्रूपं द्रष्टुं नाशक्नोत्। अतृप्त्या स कातरोऽभवत्।

तदा जनशून्ये अरण्ये यतमानं नारदं भगवान् गम्भीरमधुरस्वरेणावदत् – "हे वत्स! नारद! अनेन देहेन त्वं मां पुनर्द्रष्टुं न शक्ष्यसि। अतृप्तवासनयोगिभिरहं न दृश्ये। तव हृदये मम दर्शनाकाङ्क्षाया उत्पादनार्थमेव क्षणकालनिमित्तमहं तुभ्यं दर्शनं ददौ। मद्दर्शनेच्छुसाधकाः शनैः शनैः तेषां हृदयस्थरागद्वेषादीन् परित्यजन्ति। स्वल्पकालं यावत् साधुसेवयैव तव चित्तं दृढतया मन्निष्ठमभवत्। इदानीं त्वमिदं प्राकृतं मलिनं पाञ्चभौतिकं देहं परित्यज्य मम पार्षदो भविष्यसि। मन्निविष्टा तवेयं चित्तवृत्तिः कथञ्चिदपि न च्योतिष्यति। सृष्टिविलये सत्यपि मत्कृपया तवास्य साधकदेहस्य स्मृतिर्न लुप्येत।" इति।

आकाशवदव्यक्तः परमात्मा इदमुक्त्वा विरराम। तस्येमां कृपामनुभूय नारदस्तं महतो महत्तममुद्दिश्य मस्तकमवनम्य प्रणामं निवेदितवान्। ततः प्रभृति सर्वविधलज्जासङ्कोचादीन् परित्यज्य स भगवतोऽपूर्वं रहस्यमयं मङ्गलमयं मधुरं च नाम लीलाश्च कीर्तयितुं स्मर्तुं चारेभे। मदमात्सर्यासक्तयस्तस्य पूर्वमेव निवृत्ताः। ततः स 'कदाऽहं भगवदाश्वासितं तमधिकारमाप्नुयामि'ति चिन्तया कालं प्रतीक्षन् पृथिव्यां तीर्थेषु तीर्थेषु भ्रमितुमारेभे। अथैकदा सौदामनीव काल आगतः। शुद्धभागवततनुप्राप्तिकाले उपस्थिते प्रारब्धकर्मणि विनष्टे च सति नारदस्य पाञ्चभौतिकदेहो विनष्टः। प्रलयकाले जलधिशायितश्रीनारायणस्य निःश्वासेन तस्य हृदयं ब्रह्मणा सह नारदः प्रविष्टवान्। तत एकसहस्रचतुर्युगेष्वतिक्रान्तेषु सत्सु ब्रह्मा निद्रात उत्थाय यदा स्रष्टुमैच्छत् तदा तस्येन्द्रियेभ्यो मरीच्यादिभिः ऋषिभिः सह नारदोऽपि आविर्बभूव। तस्मादारभ्य वैकुण्ठे त्रिभुवनेषु चाप्रतिहतगतिः सन्नारदः पर्यटति। तस्य जीवनस्य केवलमेकमेव व्रतमस्ति–तद्धि नैरन्तर्येण भगवद्भजनम्। देवदत्तस्वरब्रह्मविभूषिताया वीणायाः मूर्च्छनालापसंयोगेन श्रीगोविन्दगुणान् गायन्नारदः सर्वत्र परिभ्रमति। तथाहि भागवते उक्तं–

"देवदत्तामिमां वीणां स्वरब्रह्मविभूषिताम्। मूर्च्छयित्वा हरिकथां गायमानश्चराम्यहम्"[२] इति।

(श्रीमद्भागवतम्– १/६/३३)।

गीतिकाले हरिस्तस्य हृदये आविर्भवति। पुनः पुनर्विषयभोगवासनाभिर्व्याकुलचित्तसंसारिजीवानां हरिगुणानुकीर्तनमेव भवपारस्यैकैव तरणीति नारदस्य प्रत्यक्षानुभवः। कामादिपीडितमानवो गोविन्दसेवया यथा प्रत्यक्षतया शान्तिं लभते यमनियमादियोगमार्गेण न तथा शान्तिमाप्नोतीत्युक्त्वा नारदो व्याससकाशादनुमतिमादाय वीणां वादयन् स्वच्छन्दविहारं च कामयन्नन्यत्र जगाम।

**भक्तिलक्षणम्–** नारदप्रणीते भक्तिसूत्रे प्रथमाध्याये द्वितीये सूत्रे भक्तिलक्षणं प्रकाशितम्। तत्सूत्रं हि "सा त्वस्मिन् परमप्रेमरूपा"३ इति। (भक्तिसूत्रम्–२)। भगवति परमं सर्वोत्कृष्टं प्रेमैव भक्तिरिति नारदमतम्। ईश्वरप्रेम भक्तिरिति सूत्रार्थः। अत्र 'अस्मिन्' इत्यत्र इदमिति शब्दप्रयोगेन ईश्वरस्य सर्वविधरूपाणि गृह्यन्ते। साम्प्रदायिकमनोभावापनोदनाय नारदेन इदं सर्वनामपदं प्रयुक्तम्। भक्तिर्भवति अमृतस्वरूपा। अमृतपानेन यथा देवतादय अमरा भवन्ति तथा भक्तिलाभेन मानवा लोकसमाजेषु अमरख्यातिं लभन्ते। भक्तिं लब्ध्वा पुमान् सिद्धिं समधिगच्छति तृप्तश्च भवति। यदि कोऽपि जनो भक्तिं लभते तर्हि सोऽन्यत् किञ्चिदपि न वाञ्छति। तस्य सकलशोका दूरीभवन्ति। श्रीमद्भगवद्गीतायाः षष्ठाध्यायेऽपि समचिन्तनं प्रकाशितं भगवता श्रीकृष्णेन –

"यं लब्ध्वा चापरं लाभं मन्यते नाधिकं ततः। यस्मिन्स्थितो न दुःखेन गुरुणापि विचाल्यतम्" इति।

(श्रीमद्भगवद्गीता–६/२२)।

नन्वौदासीन्ये सति कथं शास्त्रनिर्देशरक्षणं स्यात्? उच्यते यदादौ भक्तिमार्गे निश्चयस्य दार्ढ्यमागच्छतु नाम, ततः स्यात् शास्त्रनिर्देशरक्षणम्। न चेत् भक्तः स्वमार्गभ्रष्टः स्यात्। यावत्पर्यन्तं भक्तस्य वाह्यिकविषये ज्ञानं तिष्ठति तावदेव स सामाजिकव्यवहारं कुर्यात्। यदा तस्य वाह्यिकविषये ज्ञानं लुप्येत तदा स सामाजिकव्यवहारमपि त्यजेत्। किन्तु भोजनादिव्यापारं स आ शरीरधारणावधि साधयेत्।

**भक्तिस्वरूपविषये मतभेदाः–** अन्ये भक्तिवादिनो भक्तेर्विविधानि लक्षणान्युपस्थापितवन्तः। तद्यथा पूजदिष्वनुराग इति पाराशर्यः व्यासः, भगवत्कथादिष्वनुराग इति गर्गः, आत्मरत्यविरोधेन भगवत्प्रीतिरिति शाणिडल्यश्चेति। नारदमते तु ईश्वरार्पिताखिलाचारता ईश्वरविस्मरणे हृदयस्य परमव्याकुलता चेति भक्तिस्वरूपम्। एतादृशभक्तेरुदाहरणं यथा व्रजगोपिकानामासीत्। कृष्णविरहेण ता व्याकुला जाताः। परन्तु व्याकुलावस्थायामपि भगवतो माहात्म्यज्ञानस्य विस्मृतिस्तासां गोपिकानां नाभवत्। यदि भगवत्प्रेम्णि भगवतो माहात्म्यज्ञानं न स्यात्तर्हि तत्प्रेम जाराणामिवायथार्थं स्यात्। पार्थिवप्रेम्णि प्रेमास्पदसुखसुखित्वं नास्त्येव। तत्र स्वार्थचिन्तैव प्राधान्यं भजते। ईश्वरप्रेम्णि भक्तेश्वरयोः पारस्परिकं प्रेमास्पदसुखसुखित्वमस्ति।

**भक्तिश्रैष्ठ्यम्–** भक्तिर्हि कर्मज्ञानयोगेभ्योऽप्यधिकतरा भवति। तत्र

कारणं हि कर्मादियोगानां फलमेव भक्तिः। कर्मादिमार्गावलम्बनेन यानि फलानि लभ्यन्ते तानि सर्वाण्येव भक्तिपथाऽनायासमेव लभ्यन्ते। तत्रान्यदपि कारणमस्ति। ईश्वरोऽभिमानं द्वेष्टि दैन्ये च तस्य प्रीतिर्वर्तते। ज्ञानादिमार्गे 'अहं ज्ञानी', 'बहूनि जगत्कल्याणकर्माणि मया कृतानि', 'अहं शत्रुं भस्मीकर्तुं शक्नोमि' चेत्याकारा अभिमानाः साधकस्य मनसि कदाचिदागच्छन्ति। परन्तु भक्तस्य तादृशभिमाना नागच्छन्ति तस्य दीनस्वभावत्वात्।

**भक्तिसाधनम्–** ननु किं तावत् भक्तेः साधनम्? केचन ज्ञानमेव तत्साधनमिति वदन्ति। अन्ये च भक्तिसाधनमस्ति ज्ञानम्; ज्ञानस्य च साधनमस्ति भक्तिरिति कथयन्ति। अत्र सनत्कुमारादयो ब्रह्मकुमारा 'भक्तिः स्वयमेव फलरूपा' इति मतमुपस्थापयन्ति। राजविषये ज्ञानमेव राजानुकूल्यलाभाय न कारणं भवति। तत्र राजसेवा कारणं भवति। यथा वा भोजनविषयकं ज्ञानमेवास्माकं क्षुधानिवृत्तिं न करोति। तत्र वास्तविकतया रन्धनमशनं च क्षुन्निवृत्तेः प्रकृतसाधनं भवति। अत ईश्वरविषयकशास्त्रज्ञानमेव ईश्वरदर्शनलाभे न कारणं भवति। परन्तु तद्विषयिणी सुगभीरा प्रीतिरेवावश्यिकीत्यवध्येयम्। अतो मुमुक्षुभिः सैव भक्तिर्ग्राह्या। तथाह्युक्तं नारदपञ्चरात्रे–

"धर्मार्थकाममोक्षेषु नेच्छा मम कदाचन। त्वत्पादपङ्कजास्वादजीवितं दीयताम्" इति।

पञ्चदशशतके वङ्गीयप्रदेशे नवद्वीपे आविर्भूतेन महता भक्तिसाधकेन श्रीचैतन्यदेवेनापि तदीये शिक्षाष्टके उक्तं–

"न धनं न जनं न सुन्दरीं कवितां वा जगदीश कामये। मम जन्मनि जन्मनीश्वरे भवताद्भक्तिरहैतुकी त्वयिम्" इति।

भक्तिसाधनविषये यद्यपि मतभेदाः सन्त्याचार्येषु तथापि भगवत्प्रीतिविषये तेषां मतभेदो नास्ति। भक्तिर्विषयत्यागात् सङ्गत्यागाच्च भवति। निरन्तरभजनात् सा दृढा भवति। वयं यदाऽन्येषु कर्मसु व्यापृता भवेम तदाऽपि भगवद्गुणश्रवणे कीर्तने च यतेमहि। तेन भक्तिः सुदृढा भवेत्। मुख्यतः सा भक्तिर्महापुरुषाणां कृपयैव भगवत्कृपालेशा लभ्यते। महज्जनानां सङ्गो दुर्लभोऽबोध्योऽव्यर्थश्च। ते कृपावशाच्छिष्यांस्तारयन्ति। ईश्वरस्य कृपयैव महत्सङ्गो लभ्यते यतो हि ईश्वरतज्जनयोर्भेदो नास्ति। अतो भक्तिरेव साधनीया।

साधनपथि दुःसङ्गः सर्वथैव त्याज्यः। दुःसङ्गात् कामक्रोधमोहस्मृतिभ्रंशबुद्धिनाशसर्वनाशा जायन्ते। कामादयस्तरङ्गायिता अपि दुःसङ्गात्समुद्रायन्ति।

**मायातरणम्–** ततो नारदः पृच्छति 'कस्तरति कस्तरति मायाम्?' स एव उत्तरं प्रयच्छति–'यः सङ्गं त्यजति, यो महानुभावं सेवते, निर्ममो भवति' इति। गेहादिष्वासक्तिं त्यज्य यो महापुरुषं सेवते स एव संसारमायां तरति। पुनश्च यो विविक्तस्थानं सेवते, यो लोकबन्धनमुन्मूलयति, सत्त्वरजस्तमोगुणरहितो भवति यश्च योगक्षेमं त्यजति स एव तरति। अलब्धवस्तुनो लाभो ह्यत्र योगः, लब्धवस्तुनो रक्षणमेव क्षेम। भक्त एतदुभयमपि त्यजति। ईश्वर एव भक्तस्य योगक्षेमं वहति। तदुक्तं भगवता श्रीकृष्णेन गीतायाम्–

"अनन्याश्चिन्तयन्तो मां ये जनाः पर्युपासते। तेषां नित्याभियुक्तानां योगक्षेमं वहाम्यहम्"[५] इति।

(श्रीमद्भगवद्गीता–९/२२)।

यस्य कर्मफले स्पृहा नास्ति, कर्मसु कर्तृत्वभावो नास्ति, सुखदुःखशीतोष्णादिविपरीतविषयेषु निर्विकारो भवति, स एव मायां तरति। "यो वेदानपि सन्न्यसति; केवलमविच्छिन्नानुरागं लभते"(भक्तिसूत्रम्–४९), स एव तरति। स न केवलमात्मानं तारयति, परन्तु अन्यान् लोकानपि तारयति।

**भक्तेरनिर्वचनीयत्वम्–** भक्तिर्भाषया नाभिव्यज्यते। सा ह्यनिर्वचनीयप्रेमस्वरूपा। मूकजनो यथा तस्यास्वादनं वचसा न प्रकाशयितुं शक्नोति, तथा भक्तोऽपि तदीयभक्तिं भाषया प्रकाशयितुं न समर्थो भवति। एतेनैतन्न चिन्तनीयं यत् भक्तिः कुत्रापि कस्मिन्नपि जने न प्रकाशते। सा क्वापि पात्रे प्रकाशते। भक्तिर्हि गुणरहिता, कामनारहिता, प्रतिक्षणवर्धमाना, अविच्छिन्ना, सूक्ष्मतरा स्वानुभवरूपा च। एतादृशीं भक्तिं लब्ध्वा मानवस्तामेवालोचयति, तामेव शृणोति, तामेव भाषयति, तामेव च चिन्तयति। छान्दोग्योपनिषद्यपीदमाम्नातं,

"यत्र नान्यत्पश्यति नान्यच्छृणोति नान्यद्विजानाति स भूमा, अथ यत्रान्यत्पश्यत्यन्यच्छृणोत्यन्यद्विजानाति तदल्पं, यो वै भूमा तदमृतमथ यदल्पं तन्मर्त्यम् "[६] इति।

(छान्दोग्योपनिषद्– ७/२४)।

**गौणभक्तेर्भेदः–** गौणी भक्तिस्त्रिविधा भवति सत्त्वरजस्तमोगुणानां भेदात् आर्तजिज्ञास्वर्थार्थिभेदाद्वा। तद्यथा सात्त्विकी, राजसिकी तामसिकी च भक्तिः। अत्र उत्तरस्मादुत्तरस्मात्पूर्वपूर्वा श्रेयाय भवति। तद्वत् अर्थार्थिनो जिज्ञासुः श्रेयान्, जिज्ञासोश्च आर्तः श्रेयान् भवतः। वासनायास्तारतम्यभेदेनैवं भेदो भवति। एतेभ्यो ज्ञानी श्रेष्ठो भवति तस्य वासनायाः परिक्षीणत्वात्। अर्थार्थी ईश्वरमर्थाय भजति। जिज्ञासुः राजसिको भवति। आर्तश्च रोगादिप्रशमनाय भगवन्तं भजते। परन्तु ज्ञानी एकनिष्ठो भवति।

**भक्त्याः सुलभता–** अन्येभ्यो मार्गेभ्यो भक्तिः सुलभा भवति। ज्ञानमार्गे साधकस्य विवेकवैराग्यमुमुक्षत्वादिभिस्तथा शमदमोपरतितितिक्षाश्रद्धासमाधानैः प्रयोजनमस्ति। राजयोगसाधनार्थं योगिनः सुस्वास्थ्येन अनुकूलपरिवेशेन आर्थिकसुस्थित्या च प्रयोजनमस्ति। कर्ममार्गे सदैव अहङ्कारः परिहरणीयः। भक्तिपथि एतादृशी चिन्ता नास्ति। प्रमाणान्तरस्यानपेक्षत्वात् स्वयं प्रमाणरूपत्वाच्च भक्त्याः सौलभ्यम्। प्रेम स्वत एव प्रमाणम्। तदन्यानि प्रमाणानि नापेक्षते। पुनश्च शान्तिरूपत्वात्परमानन्दरूपत्वाच्च भक्त्याः सौलभ्यम्। भक्तिं संप्राप्य साधकः स्वयमेव विस्मितो भवति। तस्य मनस्यननुभूताऽनन्दधारा विराजते। साधारणजनेभ्योऽयं मार्ग एव रुचिकरो हितकरः सुकरश्च इत्यनुभूयते।

**भक्तिमार्गस्य बाधकानि–** भक्तस्य स्वजनहान्यामपि सत्यां तद्विषये चिन्ता न कार्या भक्तस्य निवेदितात्मलोकवेदशीलत्वात्। भक्त आत्मानं यथेश्वरचरणे निवेदितवान् तथा स स्वस्याध्यात्मिकानाध्यात्मिकसकलकर्माणीश्वरचणे निवेदितवान्। ईश्वर

एव तस्य रक्षकः। परन्तु यावत्पर्यन्तं प्रेम न लभ्यते तावत्पर्यन्तं लोकैः सह व्यवहारो भक्तेन करणीय एव। भक्तेन तावत्पर्यन्तं भक्तिसाधनं तथा कर्मादिविषये उद्वेगत्यागः करणीये एव। भक्तिपथि बाधकं भवति स्त्रीधननास्तिकवैरिचरित्रादिश्रवणम्। स्त्र्यादिबिषयचिन्ताभ्यो भक्तो विमुक्तः स्यात्। न चेत्तस्य शीघ्रपतनं स्यात्। पुनश्च तेनाभिमानदम्भादिकं त्याज्यम्। ईश्वरार्पिताखिलाचारः सन् भक्तः कामक्रोधाभिमानादिकमीश्वरे एव कुर्यात्। यद्यभिमानो करणीय एव, तर्हि 'अहमीश्वरस्य भक्तोऽस्मि, अतो मम काऽपि हानिर्न स्यात्' इत्यादयोऽभिमानास्तेन करणीयाः। त्रिरूपभङ्गपूर्वकमर्थात् विषयविषयितत्सम्बन्धभङ्गपूर्वकं नित्यदासवत् नित्यकान्तावच्च भक्तेन प्रेमैव कार्यम्। दासो यथा सदा प्रभोराज्ञां पालयति तथा भक्त ईश्वराज्ञां पालयेत्। यथा वा काऽपि कान्ता स्वस्वामिनि स्निह्यति तद्वद्भक्तोऽपि भगवत्यनुरागं कुर्यात्।

**भक्तमाहात्म्यम्–** येषां भक्तानां सविधे भगवानेव एकमुद्देश्यं भवति ते हि मुख्या भक्ताः। ते कण्ठावरोधरोमाञ्चाश्रुभिः परस्परं लपमानाः स्वकुलानि समग्रां पृथिवीं च पावयन्ति। तेषां पादस्पर्शेन यत्किमपि स्थानं तीर्थीभवति, यत्किमपि कर्म सुकर्मीभवति, यत्किमपि शास्त्रं च सच्छास्त्रीभवति। एतदेव मुख्यभक्तानां माहात्म्यम्। तत्र कारणं हि ते सदेश्वरमया भवन्ति। तान् विचिन्त्य तेषां पूर्वपुरुषा मोदन्ते, देवता नृत्यन्ति पृथिवीयं च सनाथा भवति। यत्र कुत्रापि यस्मिन् कस्मिन्नपि देशे काले वा एतादृशभक्तानामाविर्भावो भवितुमर्हति। अत्र यथा जातिविद्यारूपकुलधनक्रियादिभेदो नास्ति तथा एते भक्ता अपि जात्यादिगतभेदं न स्वीकुर्वन्ति। सर्वान्नेव जनान् ते अङ्गीकुर्वन्ति। ईश्वरस्वभावत्वात्ते ईश्वर इव सकलजीवान् प्रति प्रेम प्रदर्शयन्ति।

**बाधकप्रतिकाराः–** साधनमार्गस्य बाधकानां प्रतिकारार्थं देवर्षिणा नारदेन केचनोपाया निर्दिष्टाः। तत्रादौ तेनोक्तं यत् साधकेन वादो नावलम्ब्य इति। अत्र वादो नाम व्यर्थतर्कोपस्थापनम्। वादा नानाविधा असीमा च भवन्ति। अतस्तत्र वादेन सिद्धान्तहानिर्विश्वासलोपश्च जायेते। जनैः सह मनोमालिन्यं च भवति वादेन। अतश्चित्तमशान्तं भवति वादावलम्बनेन। तर्हि भक्तेन किं करणीयमस्ति? उच्यते नारदेन "भक्तिशास्त्राणि मननीयानि तदुद्बोधककर्माणि करणीयानि"७ इति। (भक्तिसूत्रम् ७६)। 'मम यदा दुःखमपगच्छेत् सुखं यदा चागच्छेत्तदाऽहमीश्वरसाधनं करिष्यामि' इति विचिन्त्य भक्तेन न कालो यापनीयः। तेन क्षणार्धमपि व्यर्थं न नेयम्। लोकसमाजे भक्तेनाहिंसासत्यशौचदयास्तिक्यादिचारित्र्याणि परिपालनीयानि। तेनास्माभिः सर्वदा सर्वभावेन निश्चिन्तितैर्भगवानेव भजनीयः।

**भक्तिफलम्–** भक्तेन कीर्त्यमान ईश्वरः शीघ्रमेव भक्तहृदयेष्वाविर्भवत्यनुभावयति च भक्तान्। अतीतादित्रिकालेषु ज्ञानकर्मभक्तिषु वा भक्तिरेव गरीयसी भक्तिरेव गरीयसीत्यत्र नास्ति संशयलेशः।

**भक्तिभेदाः–** यद्यपि भक्तिरेकधा तथापि सा एकादशधा प्रकाश्यते। एकादशविधा भक्तयो यथा भगवतो गुणमाहात्म्यासक्तिः, रूपासक्तिः, पूजासक्तिः, स्मरणासक्तिः, दास्यासक्तिः, सख्यासक्तिः, वात्सल्यासक्तिः, कान्तासक्तिः, आत्मनिवेदनासक्तिः, तन्मयतासक्तिः, परमविरहासक्तिश्चेति। एकादशभिरेवोपायैर्भगवान् लभ्यते। अन्यथाऽपि भक्तिः प्रकाश्यते। गुणमाहात्म्यासक्त्या नारदव्यासशुकदेवादयः, रूपासक्त्या मैथिलजनाः दण्डकारण्यस्य ऋषयश्च, पूजासक्त्या भरतादयः, स्मरणासक्त्या प्रह्लादध्रुवादयः,दास्यासक्त्या हनुमद्विदुरादयः, सख्यासक्त्या अर्जुनसुदामकुचेलादयः, वात्सल्यासक्त्या कौशल्यादेवकीयशोदादयः, कान्तासक्त्या रुक्मिण्यादयः, आत्मनिवेदनासक्त्या हनुमदादयः, तन्मयतासक्त्या याज्ञवल्क्यसनत्कुमारादयः, परमविरहासक्त्या कृष्णविरहितव्रजगोप्यादयश्चेश्वरमापुः। श्रीमद्भागवते अपि भक्त्या नवविधा भेदाः स्वीकृताः। तद्यथा–

"श्रवणं कीर्तनं विष्णोः स्मरणं पादसेवनम्। अर्चनं वन्दनं दास्यं सख्यमात्मनिवेदनम्"८ इति।

(श्रीमद्भागवतम्–७/५/२३)।

अन्तिमपर्वणि नारदेनोच्यते यत् जनजल्पनिर्भया एकमताः कुमारव्यासशुकशण्डिल्यगर्गविष्णुकौण्डिन्यशेषोद्धवारुणिबलिहनुमद्वि भीषणादयो भक्त्याचार्या पूर्वोक्तमतान्युपस्थापयन्ति। यो जनो नारदप्रोक्तमिदं शिवोपदिष्टमनुशासनं विश्वसिति श्रद्धत्ते च स भक्तिमान् भवति, स प्रेष्टं लभते इति नारदस्य दृढाभिमतम्।

**उपसंहृतिः–** ईश्वरस्य महता भक्तेन नारदेन भक्तिलक्षणविषये तथा च तस्याः स्वरूपविषये सरलभाषया सुरगिरा यानि मतान्युपन्यस्तानि तान्यन्यत्र कुत्रचिन्नोपलभ्यन्ते। आ बाल्यादेव नारदस्य जीवनं संकटमयमासीत्। परन्तु स सदा ईश्वरविश्वासी ईश्वरनिर्भरश्चासीत्। अतस्तस्य मनः सदाऽनन्दपूर्णं शक्तिशालि चासीत्। पञ्चमवर्षे स मातृविहीनोऽभवत्। ततः प्रभृति स ईश्वरान्वेष्यभवत्। गभीरारण्ये स ईश्वरं ललाभ। ततः स देवदत्तवीणायाः स्वरमूर्च्छनालापेन भगवन्माहात्म्यं गायन् समग्रे त्रिभुवने परिभ्रमति भक्तांश्चोपदिशति। तद्विरचितभक्तिसूत्रपाठादस्माकं भक्तिविषयिण्याकाङ्क्षा दूरीभवति। अस्मद्धृदयेषु च भक्तिभावो जगर्ति। अतो देवर्षये नारदाय भूयो भूयः प्रणामो निवेद्यते। सर्वेषां मङ्गलं भूयादिति शम्।

**उत्सनिर्देशः**


१. वेदव्यासः, श्रीमद्भगवतमहापुराणम्, (प्रथमखण्डम्, वङ्गीयसंस्करणम्), गीताप्रेस्, गोरक्षपुरम्, अष्टमपुनर्मुद्रणम्, २०१२ खीष्टाब्दः, पृष्ठाङ्कः–६३, श्लोकसंख्या–१/५/२३.

२. वेदव्यासः, श्रीमद्भगवतमहापुराणम्, (प्रथमखण्डम्, वङ्गीयसंस्करणम्), गीताप्रेस्, गोरक्षपुरम्, अष्टमपुनर्मुद्रणम्, २०१२ खीष्टाब्दः, पृष्ठाङ्कः–६६, श्लोकसंख्या–१/६/३३.

३. स्वामी चिन्मयानन्दः, नारदभक्तिसूत्र, सेन्ट्राल् चिन्मय मिशन् ट्राष्ट्, मुम्बाइ, २०११ खीष्टाब्दः, सूत्रसंख्या–२, पृष्ठाङ्कः–२.

४. स्वामी चिन्मयानन्दः, नारदभक्तिसूत्र, सेन्ट्राल् चिन्मय मिशन् ट्राष्ट्, मुम्बाइ, २०११ खीष्टाब्दः, सूत्रसंख्या–८, पृष्ठाङ्कः–१५.

५. स्वामी स्वरूपानन्दः, श्रीमद्भगवद्गीता, अद्वैत आश्रम, मायावती, चम्पावत्, उत्तराखण्ड, २०१६ खीष्टाब्दः, पृष्ठाङ्कः–१६४, श्लोकसंख्या–६/२२.

६. सेन, अतुलचन्द्रः, अन्ये च, उपनिषद्, हरफ प्रकाशनी, २०१८खीष्टाब्दः, छान्दोग्योपनिषद्–७/२४, पृष्ठाङ्कः–६२१.

७. स्वामी चिन्मयानन्दः, नारदभक्तिसूत्र, सेन्ट्राल् चिन्मय मिशन् ट्राष्ट्, मुम्बइ नगरी, २०११ खीष्टाब्दः, सूत्रसंख्या–७६, पृष्ठाङ्कः–१५४.

८. वेदव्यासः, श्रीमद्भगवतमहापुराणम्, (प्रथमखण्डम्, वङ्गीयसंस्करणम्), गीताप्रेस्, गोरक्षपुरम्, अष्टमपुनर्मुद्रणम्, २०१२ खीष्टाब्दः, पृष्ठाङ्कः–७७६, श्लोकसंख्या–७/५/२३.